# सरोवरतटे आमोदः



पठनम् एव अवगमनम्

*प्रथम संस्कृत संस्करण :* अगस्त 2015 श्रावण 1937
*पुनर्मुद्रण :* जुलाई 2020 श्रावण 1942



**PD 153T RPS**

**ISBN** 978-93-5007-353-7 (वर्षा-सैट)
978-93-5007-377-3

वर्षा-क्रमिक-पुस्तकमाला प्राथमिककक्षायाः बालानां कृते वर्तते। अस्याः अभिप्रायः – 'बोधनेन सह' स्वयंपठनस्य अवसरपरिकल्पनं वर्तते। अस्याः पुस्तकमालायाः कथाः चतुर्षु स्तरेषु पञ्चसु कथावस्तुषु च विभक्ताः सन्ति। 'वर्षा' बालानाम् सानन्दं पठने स्थायिपाठकत्वेन निर्माणे च सहायिका भविष्यति। बालेभ्यः दैनन्दिन्यः लघुलघुघटनाः कथा इव रुचिकराः प्रतीयन्ते। अतः वर्षा-मालिकायाः सर्वाः कथाः दैनिकजीवनस्य अनुभवान् आधृत्य वर्तन्ते। लघुबालानां पठनाय प्रचुरमात्रायां पुस्तकानि उपलब्धानि स्युरिति अस्याः पुस्तकमालायाः अपरमुद्देश्यं वर्तते।

वर्षा-पुस्तकमाला बालानां पठन-शिक्षणे, स्थायिपाठकनिर्माणे, सूचनासंग्रहणे पाठ्यचर्यायाः प्रत्येकं क्षेत्रे च सहायिका भविष्यति। शिक्षकाः वर्षा-मालिकां कक्षायाम् तथा स्थापयेयुः येन बालाः सुखेन पुस्तकानि ग्रहीतुं शक्नुयुः।



### पुस्तकमाला निर्माण समिति

कंचन सेठी, कृष्ण कुमार, ज्योति सेठी, टुलटुल विश्वास, मुकेश मालवीय, राधिका मेनन, शालिनी शर्मा, लता पाण्डे (स्वर्गीय), स्वाति वर्मा, सारिका वशिष्ठ, सीमा कुमारी, सोनिका कौशिक, सुशील शुक्ल

**सदस्य-समन्वयक** – लतिका गुप्ता

**संपादक (संस्कृत)** – कृष्णचन्द्र त्रिपाठी

**संस्कृत अनुवाद** – रणजित बेहेरा, भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

**चित्रांकनः** कृतिका एस. नरूला **सज्जा तथा आवरण–** निधि वाधवा

### संस्कृत समीक्षा समिति

यज्ञ दत्त शर्मा, सेवानिवृत *प्रोफ़ेसर संस्कृत,* दिल्ली विश्वविद्यालय, दिल्ली; कृष्ण चन्द्र त्रिपाठी, *प्रोफ़ेसर संस्कृत,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी. नई दिल्ली; राजेश्वर प्रसाद मिश्र, *प्रोफ़ेसर संस्कृत,* संस्कृत पालि एवं प्राकृत विभाग, कुरुक्षेत्र विश्वविद्यालय, हरियाणा; भागीरथी नन्द, *एसोसिएट प्रोफ़ेसर,* साहित्य विभाग, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, कटवारिया सराय, नई दिल्ली; पतञ्जलि कुमार भाटिया, *अध्यक्ष,* संस्कृत विभाग, पी.जी.डी.ए.वी. कॉलेज, दिल्ली विश्वविद्यालय, नई दिल्ली; सूर्य नारायण नन्द, *अतिथि अध्यापक,* सेंट स्टीफेन्स कॉलेज, दिल्ली विश्वविद्यालय, दिल्ली; हरेकृष्ण अगस्ति, *असिस्टैंट प्रोफ़ेसर,* व्याकरण विभाग, कवि कुलगुरु कालिदास संस्कृत विश्वविद्यालय, नागपुर, महाराष्ट्र; सुगन्ध पाण्डेय, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, काशीपुर, ऊधम सिंह नगर, उत्तराखण्ड; निर्मल मिश्र, *टी.जी.टी. संस्कृत,* केन्द्रीय विद्यालय, नरेला, दिल्ली; डॉ. जतीन्द्र मोहन मिश्र, *सह आचार्य,* भाषा शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

### आभार ज्ञापन

प्रो. बी.के.त्रिपाठी, *निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; कृष्ण कुमार, *पूर्व-निदेशक,* एन.सी.ई.आर.टी., नई दिल्ली; वसुधा कामथ, *पूर्व-संयुक्त-निदेशक,* केन्द्रीय शैक्षिक प्रोद्योगिकी संस्थान, एन.सी.ई.आर.टी., नई दिल्ली; उमा शंकर शर्मा ऋषि, *पूर्व विभागाध्यक्ष,* संस्कृत विभाग, पटना विश्वविद्यालय, पटना, बिहार; के. के. वशिष्ठ, *पूर्व-विभागाध्यक्ष,* प्रारंभिक शिक्षा विभाग, एन.सी.ई.आर.टी., नई दिल्ली।

80 जी.एस.एम. पेपर पर मुद्रित

सचिव, राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद्, श्री अरविन्द मार्ग, नयी दिल्ली 110 016 द्वारा प्रकाशन प्रभाग में प्रकाशित तथा लक्ष्मी ऑफ़सेट प्रिंटर्स, प्लाट नं.-1, सैयद नगर, चावड का मढ, नाई की थड़ी, जयपुर - 302 027 द्वारा मुद्रित।

**एन.सी.ई.आर.टी. के प्रकाशन प्रभाग के कार्यालय**

- एन.सी.ई.आर.टी. कैंपस, श्री अरविंद मार्ग, नयी दिल्ली 110 016 **फोन** : 011-26562708
- 108, 100 फीट रोड, हेली एक्सटेंशन, होस्डेकेरे, बनाशंकरी III स्टेज, बंगलूरु 560 085 **फोन** : 080-26725740
- नवजीवन ट्रस्ट भवन, डाकघर नवजीवन, अहमदाबाद 380 014 **फोन** : 079-27541446
- सी.डब्ल्यू.सी. कैंपस, निकट: धनकल बस स्टॉप पनिहटी, कोलकाता 700 114 **फोन** : 033-25530454
- सी.डब्ल्यू.सी. कॉम्प्लैक्स, मालीगाँव, गुवाहाटी 781 021 **फोन** : 0361-2674869

***प्रकाशन सहयोग***

| | | | |
|---|---|---|---|
| अध्यक्ष, प्रकाशन प्रभाग | : *अनूप कुमार राजपूत* | मुख्य उत्पादन अधिकारी | : *अरुण चितकारा* |
| मुख्य संपादक | : *श्वेता उप्पल* | मुख्य व्यापार प्रबंधक | : *विपिन दिवान* |

# सरोवरतटे आमोदः


काजलः


माधवः






काजल–माधवयोः ग्रामे एकः सरोवरः आसीत्। तौ क्रीडनार्थं प्रतिदिनं सरोवरम् अगच्छताम्। ताभ्यां सरोवरस्य जलम् अतीव रोचते स्म।





एकदा तौ सरोवरतटं प्राप्तवन्तौ।
तत्र बहवः बकाः समागताः आसन्।
सः सरोवरः श्वेत-बकैः मण्डितः आसीत्।







काजलः माधवः च बक-समूहं दृष्ट्वा प्रसन्नौ जातौ।
कूर्दमानौ तौ बकानां मध्ये प्रविष्टौ।
बकान् धर्तुम् अपि तौ अयतताम्।



अग्रिमे दिने मोनी अपि ताभ्यां सह सरोवरम् आगच्छत्।
मोनी बकान् दृष्ट्वा बुक्कति स्म।
काजलः तां स्नेहेन तूष्णीं कर्तुं प्रायतत्।







किन्तु मोनी बुक्कन्ती एव आसीत्।
सा धावित्वा बकानाम् उपरि प्रहारम् अकरोत्।
काजलः ताम् अङ्के धृतवती।







माधवः काजलः च तां प्रापयितुं गृहम् अगच्छताम्।
तौ सरोवरस्य अपरतः कानिचित् नीडानि अपश्यताम्।
बकाः सरोवरस्य तटे वृक्षेषु नीडानि अरचयन्।







नीडेषु तृणानि घासाः पक्षाश्च योजिताः आसन्।
बकानां नीडेषु अण्डानि अपि आसन्।
काजलः माधवश्च दूरात् अण्डानि दृष्टवन्तौ।





तौ प्रतिदिनम् अण्डानि द्रष्टुम् आगतौ।
प्रत्येकं नीडे त्रीणि चत्वारि वा अण्डानि आसन्।
अण्डानि ईषत् नीलवर्णानि क्षुद्राणि बृहन्ति च आसन्।







कतिपय-दिवसानन्तरं कानिचित् अण्डानि धूसरितानि जातानि।
तेभ्यः बक-शावकाः निर्गताः।
बक-शावकाः चूँकारं पक्षचालनञ्च कुर्वन्ति स्म।







बकाः चञ्चुषु तेषां कृते आहारम् आनयन्ति स्म।
ते शावकानां चञ्चुषु आहारं क्षिपन्ति स्म।
काजलः माधवश्च एतत् दृष्ट्वा प्रसन्नौ जातौ।





बक-शावकाः नीडेभ्यः बहिः अपि आगच्छन्।
सरोवरस्य तटे बहवः बक-शावकाः दृश्यन्ते स्म।
काजलः माधवः च बक-शावकान् अनु अधावताम्।





शनैः शनैः शावकाः बृहदाकाराः जाताः।
ते अपि अन्यैः बकैः सह सरोवरे विहरन्ति स्म।
ते सरोवरे मत्स्यान् मण्डूकान् अपि ग्रहीतुम् आरभन्त।





एकदा सर्वे बकाः स्वगृहं प्रतिनिवृत्ताः।
काजलः माधवः च उड्डीय गच्छतः सर्वान् बकान् अपश्यताम्।
तौ जानतः स्म यत् अग्रिम-वर्षे बकाः पुनः आगमिष्यन्ति।





तस्मिन् दिवसे पुनः मोनी सरोवरम् आगच्छत्।
काजलः तां न दूरीकृतवती।
मोनी ताभ्यां सह भ्रमन्ती आसीत्।






तदा तयोः दृष्टिः सरोवरे स्नान-मग्नयोः महिष्योः उपरि पतिता।
काजलः माधवः च महिष्योः उपरि उपाविशताम्।
तौ महिष्योः पृष्ठयोः सुधाखण्डेन स्वनामनी अपि अलिखताम्।

